श्रुतज्ञानप्रकाशनमाला-पुष्पं द्वितीयम्

णमोऽत्थु णं समणस्स भगवओ महावीरस्स ।

कलिकालसर्वज्ञ-आचार्यमुकुटमणि-श्रीमद् हेमचन्द्रसूरिभ्यो नमः ।

सुविशुद्धमार्गप्ररूपक-सुगृहीतनामधेय-आचार्यशिरोरत्न-श्रीमद्विजयरामचन्द्रसूरिभ्यो नमः ।

## कलिकालसर्वज्ञ–आचार्यशिरोमणि-
## श्रीमद् हेमचन्द्रसूरीश्वरविरचितम्

# श्री परिशिष्ट पर्व

( पाठान्तर–टिप्पणीभ्यामलंकृतम् )

संशोधकः संपादकश्च सुबोधचन्द्र नानालाल शाह इत्याख्यः

प्रकाशकम्—
श्रीमती गंगाबाई जैन चेरिटेबल ट्रस्ट, विलेपारले, मुंबई–५६

प्रकाशक :-

**प्राणलाल सुंदरजी कापडिया**

व्यवस्थापक, श्रीमती गंगाबाई जैन चेरिटेबल ट्रस्ट
सुंदरवन, विलेपारले (पश्चिम)
मुंबई-५६ (A. S.)



आवृत्ति-प्रथम



मूल्यम्-२५ रूप्यकाः



वीर संवत् २५०६
विक्रम संवत् २०३६
इस्वी सन् १९८०



मुद्रक :-

**संगीता प्रिन्टिंग प्रेस**

५, कपूर काटेज, छठ्ठा रस्ता,
शान्ताक्रुझ (पूर्व), ४०००५५

# समर्पण

जेमनी पावन वाणीए मारा जेवा कंईकनो उद्धार कर्यो,

जेमनी करुणाने कोई मर्यादाज नथी,

जमना रक्तना कणकणमां सर्वजीवोने शाश्वतसुख पमाडवा माटे सम्यग्दर्शननुं दान करवानीज तालावेली छे, अने

जेमनी धननो मोह छोडवानी देशना द्वाराज अमारुं आ ट्रस्ट साकार बन्युं,

ते, वर्तमानकालमां पूर्वना महापुरुषोनी झांखी करावता, परमप्रतापी, सुविशुद्ध-देशनादाता, जिनमार्गनी स्थापनाना ज रसिक, अगणितगुणभंडार, परमोपकारी, म्हारा धर्मदाता, गच्छाधिपति, श्री श्री श्री

आचार्यभगवंत श्रीमद् विजयरामचन्द्रसूरीश्वरजी महाराजाना करकमलोमां आ परिशिष्ट पर्व समर्पण करी मारी जातने धन्य मानुं छुं अने तेमनी पासे संयम मार्गनी प्राप्तिनी याचना करुं छुं.

—प्राणलाल सुंदरजी कापडिया

# प्रकाशकीय निवेदन

आ अनादि अनंत संसारमां आमथी तेम अथडाता जीवो प्रत्येनी परम करुणाथी आपणा पूर्वाचार्योए अनेक महान पुरुषोनां जीवन आलेख्यां छे. श्रोतावर्गने ते सांभळतां रस जागे ते माटे वस्तुस्थितिथी जरा पण चलित थया विना, तेने वर्णनोथी भरपूर पण बनाव्यां छे ते पैकीनुं आ श्री परिशिष्ट पर्व छे.

आ ग्रन्थना रचयिता कलिकालसर्वज्ञ, साराय भारतवर्षमां अमारिपटह वगाडवानो उपदेश आपनार अने जेमनी उपदेशधाराना योगे आज सुधी भारतवर्षमां अहिंसानुं वृक्ष उगी नीकळ्युं हतुं ते आचार्यभगवंत श्रीहेमचन्द्रसूरीश्वरजी महाराजा माटे कंइ पण लखवुं ते सूरजने बतावया माटे दीवो हाथमां लेवा जेवी मूर्खता ज गणाय. एमणे जन्म लईने जैन शासनने तो अजवाळ्युं पण हजारो वर्ष लगी भव्यजीवोनां जीवनने पण राह बताव्यो अने जेमनी अगाध विद्वत्ता माटे तो मूर्धन्य कक्षाना पण्डितोने पण कहेवुं पड्युं के-"वैदुष्यं विगताश्रयं श्रितवति श्रीहेमचन्द्रे दिवम्" = श्री हेमचन्द्रसूरि देवलोकमां चाल्या जतां विद्वतानो एक आधार तूटी पड्यो.

तेमनुं रचेलुं परिशिष्ट पर्व अप्राप्य बनी गयुं हतुं. विक्रम संवत् १९६८ मां जैनधर्मप्रसारकसभा भावनगरे छपावेल ते ग्रन्थनी प्रति अतिजीर्णप्राय थई जवा साथे प्राप्य पण न हती. तदुपरांत, तेमां पाठांतरो आदिनी नोंधपूर्वक सुविशुद्ध पाठ आपवानी कोइ योजना न होवाथी अनेक स्थलो शंकित बनवा पाम्यां हता, तेथी अमारा ट्रस्टे आ ग्रन्थने पाठांतरोथी

शुध्ध करीने छपावधानो निर्णय कर्यो अने तदनुसार, जे जे प्राप्त थई ते ते अतिप्राचीन प्रतिओना आधारे पाठांतरो नोंधी आ ग्रन्थ मुद्रित कराव्यो

अमारा ट्रस्टनुं एक दृष्टिबिन्दु रहयुं छे के—"प्राचीन पूर्वाचार्योना रचेला ग्रन्थोने पुनर्मुद्रित करावी तेने कालना गर्भमां विलीन थता रोकवा कोशिष करवी" तदनुसार त्रिषष्टिशलाकापुरुषचरित्र–दशम पर्वना मुद्रण पछी अमे आ परिशिष्ट पर्वने आंख सामे राख्युं हतुं अने आजे आने योग्य वाचकोना करकमलमां मूकी अमे धन्यता अनुभवी रह्या छीए.

प्रस्तुत ग्रन्थमां अन्तिमकेवली श्रीजम्बूस्वामिथी आरंभी स्थविरावलीनुं आलेखन करतां, ग्रन्थकार पोते जे शाखामां दीक्षित थया ते श्री वज्री शाखाना मुल पुरुष अन्तिमदशपूर्वी भगवान श्री वज्रस्वामिना जीवनचरित्र पर्यन्तनुं आलेखन तेमणे सरल, सुबोध अने मधुर भाषामां पण मार्मिक रीते कर्युं छे.

तेमनी वाणीमां, जिनशासन प्रत्येनी द्रढता, मुनिजनो संसारनी कोई वातमां पडेज नहि, साधर्मिक बीजा साधर्मिकनी सेवा केवी रीते करे ? आचार्य भगवंतोने भगवान महावीरनी परंपरा सुविशुद्धरीते चलाववा केवी खेवना होय ? वगेरे अनेक वातो टंकारबद्ध रजू थयेली जोवा मले छे. भगवान महावीरे दर्शावेल मार्गथी तिलमात्रपण चलित न थतां तेमणे जे रीते एक एक वातोनुं प्रतिपादन कर्युं ते जोतां तेमनी प्रशस्तिमाटे एक पण शब्द पूरो लागतो नथी. महान्थीय महान् सम्यग्दृष्टि एटलो शब्द ज ते महापुरुषनी प्रशस्ति माटे, तेमनुं परिशिष्ट पर्व वांच्या बाद मारा मनमां उठयो हतो अने ते शब्द द्वारा ज तेमना चरणोमां भावपूर्ण वंदना करुं छुंः

एक बीजी वात—

मारा साधर्मिकबन्धु–कहुं ते करतां मारा धर्ममित्र–भाई श्री सुबोधचन्द्र शाहे आ ट्रस्टने पोतानुं मानी जे चीवटथी जूनी हस्तप्रतो उकेली पाठांतरो नोंध्या, मुद्रण कार्यथी अपरिचित अमारुं सर्वकार्य पोताना माथे लई लीधुं अने आ ग्रन्थने सुंदर रीते आप सौ वाचको पासे मूकवानी तक अमने आपी ते बदल अमारुं ट्रस्ट तेमनुं ऋणी छे.

आ ग्रन्थ पूज्य साधु साध्वीजी महाराजाओने सुलभताथी मले ते माटे पोताना हस्तकना ज्ञानखाताओनी विशाल रकम अर्पण करनार भाग्यवंत महानुभावोना पण अमे ऋणी छीये.

आ संपादन माटे, पोताना हस्तलिखित भंडारनी प्रतो अमने आपवा बदल 'नीतिविजयशास्त्रसंग्रह–खंभात' ना व्यवस्थापक महाशयो प्रत्ये पण अमे कृतज्ञता दाखवीओ छीओ.

अमारा ट्रस्टना प्रकाशनो वधुने वधु उपयोगी केम पूरवार थाय ? जरुरी प्रकाशनो कयां कयां ? वगेरे सर्व सूचनोनी मतत चिन्ता, तेमज ज्ञानखाताओनी रकमो गमे तेम वेडफाई न जतां आवां जरुरी प्रकाशनो पाछळज खर्चाय तेनी सतत खेवना कोईए करी होय तो ते आचार्यदेव श्रीमद् विजयमहोदयसूरीश्वरजी महाराजे. के जेओ मारा धर्मदाता, परमतारक-गुरुदेव, आचार्यपुंगव श्रीमद् विजयरामचन्द्रसूरीश्वरजीमहाराजाना पट्टधर छे. तेमनी अमारा ट्रस्टपरनी कृपाए, ट्रस्टने आवां प्रकाशनो माटे वधुने वधु धगश पेदा करी छे.

सुंदर अने टकाउ कागळो, क्षतिरहित मुद्रण, सुवाच्य अक्षरो, आ बधी अमारा ट्रस्टनी अभिलाषाओ पूर्ण करवानी अमे यथाशक्य कोशिष करी छे छतां तेमां अमे केटला सफल रह्या तेनो निर्णय तो ग्रन्थना वाचक महानुभावोएज करवानो छे.

॥ छ ॥

प्रान्ते–परमेश्वर, चरमतीर्थंपति, श्रीवीरवर्धमानस्वामीने तेमज मारा जेवा अनेकने कुमार्गेथी पाछा वाळी सन्मार्गे चढावनार, अप्रतिम करुणाना सागर, सदा जेओ वात्सल्यनी ज गंगोत्री वहावी रह्या छे तेवा हिमगिरिसमा महान् अने अतिउच्च मारा परमतारक, गुरु भगवंत, आचार्यश्रेष्ठ, युगप्रधानसम, परमगुरु, श्रीमद् विजयरामचन्द्रसूरीश्वरजी महाराजाना चरणोमां कोटि कोटि वंदना करी एक ज अभिलाषा सेवुं छुं के आ शुभ कार्य द्वारा हुं मारा अनंत संसारने शीघ्र टूंको करी परमपदनो भागी बनुं.

**प्राणलाल सुंदरजी कापडिया**
व्यवस्थापक, श्रीः गं. जै. चे. ट्रस्ट

वि. सं. २०३६
द्वि. ज्येष्ठ शु. प्रतिपदा
शुक्रवार, ता. १३-६-१९८०
विलेपारले.



## द्रव्यसहायकोनी शुभ नामावलि

रु. १३०००-००

विक्रम संवत् २०३३ नी सालमां भादरवा सुद पंचमीना क्षये ज्यारे संवत्सरी महापर्वनी आराधनानी तिथिनो भेद उपस्थित थयो त्यारे शास्त्रो अने शास्त्र-मान्य परंपरानुसारे संवत्सरी महापर्वनी आराधना औदयिकी चतुर्थी (शनिवार) ना दिवसे अने तदनुसार पर्वाधिराजनी अट्ठाईनी पण आराधना शान्ताक्रुझ (मुंबई) संघे, आचार्यदेव श्रीमद् विजयभुवनभानुसूरीश्वरजीमहाराजनी आज्ञाथी पधारेला मुनिश्री जगवल्लभविजयजी महाराजनी निश्रामां उल्लास पूर्वक करी ते वखते थयेल ज्ञानखातानी उपजना.

तेमज

रु. ५०००-००

अमदावाद, नवरंगपुरा, स्वस्तिक सोसायटीमां आवेल चन्द्रालय खाते त्यां श्री संघनी बहेनो तरफथी श्री ज्ञानखाते थयेली उपजना श्री चन्दुलाल मोहनलाल तरफथी.

# प्रस्तावना

अनंत उपकारी श्री अरिहंतपरमात्माओए संसारवर्ती भव्यजीवोने, अनंत दुःखात्मक संसारथी छोडावी, अनंत सुखात्मक मोक्षधामे पहोंचाडवा सम्यग्दर्शन–सम्यग्ज्ञान अने सम्यक्‌चारित्ररूप धर्मतीर्थनी स्थापना करी छे. ए धर्मतीर्थना अविरत वहेता प्रवाहमां श्री गणधरदेवोए गूंथेल द्वादशांगीनी अने तेने आधारे ते परमतारकना मार्गने अनुसरता महापुरुषोए रचेल आगम तथा आगमेतर ग्रंथोनी अतिशय महत्ता छे. ते ग्रन्थोना पदे पदमां द्रव्यानुयोग, गणितानुयोग, चरणकरणानुयोग अने धर्मकथानुयोग आ चार अनुयोगो भर्या पड्या छे विशिष्टज्ञानी महापुरुषो ते पदोना विवेचनमां चारे अनुयोगोने स्पष्टतया समजावता हता. कालक्रमे जीवोनी मेधा मंद थवाथी अने पदे पदे समायेला चारे अनुयोगोने समजवानी कठिनता प्रतीत थवाथी नवपूर्वथी अधिक ज्ञानना धणी आचार्यभगवान श्रीआर्यरक्षितसूरीश्वरजी महाराजाए चारे अनुयोगोना अलग अलग ग्रंथोनो विभाग करी आप्यो.

तत्त्वनी विचारणा माटे द्रव्यानुयोगनी, लोकस्वरूपादिना यथास्थित चिंतन माटे गणितानुयोगनी, चारित्रनी निर्मल आराधना माटे चरणकरणानुयोगनी अने आत्माने आराधनामां आगळ वधारवानी अने विराधनाथी बचावी अंते मुक्तिनो मुसाफर बनाववानी प्रेरणा मेळववा माटे धर्मकथानुयोगनी आवश्यकता छे. पोत-पोताना क्षेत्रमां दरेक अनुयोगो महोपकारी छे. तेमांय बालजीवोने आराधनानी सन्मुख अने विराधनाथी विमुख बनाववा माटे धर्मकथानुयोग विशेष आवश्यकता धरावे छे.

जैन वाङ्मयमां धर्मकथानुयोगना ग्रंथोनी विशाल प्रमाणमां रचना करीने, परमोपकारी महापुरुषोए भव्यजीवो उपर महान उपकार कर्यो छे. श्रीज्ञाताधर्मकथांग, श्रीउपासकदशांग, श्रीविपाकसूत्र वगेरे अंगसूत्रोमां तेमज आगमेतर संख्याबंध ग्रंथोमां विविधभाषामां आराधक अने विराधक आत्माओने आराधना अने विराधना करवाथी प्राप्त थयेल शुभाशुभ फलोनुं वर्णन करती बोधक कथाओनो विपुल संग्रह करवामां आव्यो छे

परमार्हत श्रीकुमारपालभूपालप्रतिबोधक, जैनशासनना महान प्रभावक, सवालाखश्लोकप्रमाण निष्कलंक श्री सिध्धहेमचन्द्रशब्दानुशासन, सटीककाव्यानुशासन, लिंगानुशासन, शब्दकोष, धातुकोष, तर्कशास्त्र, योगशास्त्र, तेमज श्रीतीर्थंकर परमात्मानी स्तवनाओ वगेरे विस्तृत साहित्यना भिन्न भिन्न भाषाओमां रचयिता, कलिकालसर्वज्ञ, आचार्यभगवत श्री हेमचन्द्रसूरीश्वरजी महाराजाना पुण्यनामधेयथी आ भारतवर्षमां कयो बिचक्षण अज्ञात हशे ? ते सूरिपुरंदरे 'त्रिषष्टिशलाका-पुरुषचरित्र' पर्व १ थी १० ओ महाकाय ग्रन्थनी रचना करी छे, जे ग्रंथ लगभग छत्रीश हजार श्लोक प्रमाण छे. ते ग्रंथमां वर्तमान अवसर्पिणी कालना चोवीश श्री तीर्थंकर देवो, बार चक्रवर्तीओ, नव वासुदेवो, प्रतिवासुदेवो अने बलदेवोनां चरित्रो सरल अने सुबोध पद्यमय संस्कृत भाषामां रोचक शैलिथी आलेखायां छे. ते ग्रन्थप्रासादना शिखररूपे प्रस्तुत 'परिशिष्टपर्व' नामना ग्रन्थरत्ननी रचना ते महापुरुषे करी छे. जे 'स्थविरावलीचरित्र' नामक यथार्थाभिधानने पण धारण करे छे.

तेर सर्गमय आ ग्रथरत्नमां चरमकेवली श्री जंबूस्वामीजीथी आरंभी चरमदशपूर्वी श्री वज्रस्वामीजी सुधीना स्थविर महापुरुषोनां संवेग निर्वेदोत्पादक, वैराग्यरसवृद्धिकर, मोक्षमार्गनी आराधना माटे महा प्रेरणादायी चरित्रोनुं रसप्रद वर्णन करवामां आवेल छे. प्रसगे प्रसंगे बोधदायक उक्तिओ पण मूकवामां आवेल छे. दशेय पर्वो तेमज प्रस्तुत 'परिशिष्ट पर्व' नी

रचना एवी तो अद्भुत रीते कराई छे के संस्कृत भाषाना प्रारंभिक अभ्यासीओ अेनुं चिंतन-मनन पूर्वक वांचन करे तो काव्यनो सुंदर अभ्यास थाय; उपरांत शब्दकोष, धातुकोष, जूदाजूदा प्रकारना प्रयोगोनुं ज्ञान, प्रासंगिक बोध, ते ते क्षेत्र-काल वगेरेनुं अनुभवज्ञान, तत्त्वोनो बोध वगेरे सीधा अने आनुषंगिक लाभोनी प्राप्ति पण तेमने थाय तेम छे.

श्री तीर्थंकर परमात्मा आदि महापुरुषोना चरित्रग्रंथोनी रचना पाछळ ते ते रचयिता महापुरुषोनो आशय ते ते चरित्रनायकोनी आराधना के विराधनानुं शुभाशुभ फल दर्शावी, भव्यजीवोने धर्मसन्मुख अने अधर्मविमुख बनाववानो होय छे. ते ते चरित्रनायकोना जीवनना वर्णनमां तेमने प्राप्त थयेल भौतिक सुखसामग्री के तेनी प्रकृष्टतानुं वर्णन पुण्योदयना विपाकने तथा धर्मना माहात्म्यने जणाववा माटे होय छे, नही के वाचक के श्रोतागणने ते सुख सामग्रीमां आसक्त बनाववा के ते सुख सामग्री माटे धर्म कराववा तेज रीते दुःखनी सामग्री के दुःखनी प्रकृष्टतानुं वर्णन पण ते जीवोने पापाचरणथी अने तेना मूल कारणभूत भौतिक सुखथी अने तेनी आसक्तिथी बचाववा माटे होय छे.

अहिं एक वातनुं स्पष्टीकरण करवु खास जरुरी जणाय छे के-भव्यजीवोए करणीय-अकरणीयनुं ज्ञान शास्त्र सिध्धान्तो अने तेनी पाछळना ते ते परमतारक महापुरुषोना आशयने समजीने मेळववानुं होय छे. पोतपोतानी भूमिकामां रहेला जीवो माटे श्री अरिहंत परमात्माओए जे जे विचारवा जेवुं, बोलवा जेवुं अने आचरवा जेवुं फरमाव्युं होय ते ते विहित, अने जे जे न विचारवा जेवुं, न बोलवा जेवुं, अने न आचरवा जेवुं फरमाव्युं होय ते ते निषिध्ध समजवानुं छे चरित्र ग्रंथोमां ते ते चरित्रनायकोए जे जे विचार्युं होय, बोल्या होय, के आचर्युं होय के न विचार्युं होय, न बोल्या होय के न आचर्युं होय. ते ते सर्व विचारवा बोलवा के आचरवा योग्य विहित थतुं नथी, तेमज न विचारवा जेवुं, न बोलवा जेवुं के न आचरवा जेवुं निषिध्ध थतुं नथी चरित्रकार महापुरुषो तो ते ते चरित्रनायकना जीवनमां जे जे बनावो बन्या होय तेने ते ते स्वरूपे आलेखे छे अने क्वचित् तेना हेय--उपादेयपणानो निर्देश करे पण छे, परंतु सर्वत्र तेनो निर्देश करे ज एवुं बनतुं नथी.

श्री जैन शासनमां कोईपण आगमग्रंथ, प्रकरणग्रंथ, विधिग्रंथ, अध्यात्मग्रंथ, वैराग्यग्रंथ के चरित्रग्रंथ यावत् स्तवन स्तुतिरूप ग्रंथो पण गीतार्थ अथवा गीतार्थनी निश्रा मेळव्या विनानी व्यक्तिए स्वयं भणवाना नथी. ज्यारे गीतार्थ एनुं अध्ययन करे त्यारे तेने श्री वीतराग परमात्मानी आज्ञानो वास्तविक बोध होवाथी तेमां हेयोपादेयनो विवेक स्वयं करी शके. ज्यारे गीतार्थनी निश्राए अध्ययन करनारने ते गीतार्थ ए प्रकारनो विवेक करावे. श्री जैन शासननी आ सुविशुध्ध आत्मतारक प्रणालिकानुं जो सूक्ष्मबुध्धिथी अवगाहन कराशे तो तेनी महोपकारकता तथा आवश्यकता विवेकी जीवोने समजाया विना नहि रहे. दा. त. संसारना भौतिक सुखो माटे के पापना उदये आवतां दुःखोना नाश माटे करातां धर्मानुष्ठानोने श्री अरिहंत परमात्माओए विषानुष्ठान अने गरानुष्ठान तरीके फरमाव्यां छे श्री अरिहंत परमात्मानी स्पष्ट आज्ञा छे के-"कोई पण धर्मानुष्ठान कर्मक्षय के मोक्षप्राप्तिना ध्येयथी ज करवुं" चरित्रग्रंथोमां व्यक्ति विशेषे के व्यक्तिविशेषने उद्देशीने कोई तेवा अन्यहेतुथी धर्मानुष्ठान कर्यानुं जणाव्युं होय के करवानुं जणावायुं होय तो ते विधिमार्ग तरीके उपादेय नथी बनतुं परंतु जे बन्युं छे तेनो अनुवाद कर्यो छे तेम समजवुं जरूरी छे. आपणा माटे तो उपादेय ते ज वस्तु छे के जे श्री अरिहंत परमात्मानी आज्ञानुसारी होय अने हेय ते ज वस्तु छे के जे श्री अरिहंत परमात्मानी आज्ञाथी बहिर्भूत होय.

प्रस्तुत स्थळे आटली विचारणानो हेतु एकज छे, के—वर्तमानकाळमां चरित्रग्रंथोनी एवी केटलीक वातोने पकडीने प्रभुमार्गना उपदेशक स्थाने बेठेलाओमांना पण केटलाको मुग्ध जीवोने जाणे या अजाणे उन्मार्गे दोरवानो अनिच्छनीय प्रयत्न करी रहया छे तेवा आत्माओ तेवा अनिच्छनीय प्रयत्नथी पाछा फरे अने मुग्धजीवो तेवा आत्माओना तेवा अनिच्छनीय प्रयत्नथी उन्मार्गे दोरवाई न जाय. कोई पण चरित्रग्रंथोमां शास्त्रविहित वातो करतां जूदा प्रकारनुं वर्णन द्रष्टिगोचर थाय त्यारे तेनो स्वविवेकबुद्धिथी परमार्थ विचारवो घटे; परंतु शास्त्रबाधित वस्तु पण आचरणीय छे, एवुं मानवा के मनाववानो दुराग्रह न राखवो जोईए. एज एक आत्मकल्याणनो सुविशुद्ध मार्ग छे.

श्री परिशिष्टपर्वना संबंधमां एक जाणवा जेवी वात छे—के वर्षो पूर्वे रोयल एसियाटिक सोसायटी—कलकत्ता तरफथी आ ग्रन्थनुं प्रकाशन थयेलुं त्यारे अेनी प्रस्तावनामां, जर्मन प्रोफेसर हर्मन जॅकोबीए आ काव्यमां अनेक भूलो (व्याकरण अने काव्य संबधी) होवानुं विधान करेलुं. 'अर्धो घटो घोषमुपैति नूनं' जेवा ए अर्धदग्ध विद्वानना आवा निन्द्य प्रयासने व्याकरण अने काव्यशास्त्रना विदग्ध विद्वान् श्री हरगोविन्द पंडितजीए पोतानी विद्वत्तापूर्ण लेखिनी द्वारा सर्वथा व्यर्थ बनावी दीधेल वि: सं १९६८ नी सालमां जैनधर्मप्रसारक सभा तरफथी प्रकाशित थयेला आ ग्रन्थनी प्रस्तावनामां जॅकोबीए करेला आक्षेपो अने पंडित श्री हरगोविदजीए तेनो करेलो साधार प्रतिकार जोई शकाय छे. दुःखनी वात छे के जॅकोबी जेवा विदेशी विद्वानोने संस्कृत प्राकृत भाषाना अध्ययन, आपणा धर्मग्रंथोनुं वाचन, प्रकाशन, संशोधन वगेरे प्रवृत्तिओमां सहाय,प्रोत्साहन अने बहुमान आपवामां आपणा जैनो (नामधारी) अने साधुओ (वेशधारी) नो फाळो घणो मोटो हतो अने हजु पण आवा कहेवाता धर्मप्रचारक प्रयासोमां आपणा केटलाक साधुओ अने श्रावको वधु ने वधु रस लई रहया छे अने श्रध्धा के आदर वगरना विद्वानोनी फोज उभी करी रह्या छे. तेमनाथी सावध रहेवानी आत्महितेच्छुओने खास भलामण छे.

प्रस्तुत 'परिशिष्ट पर्व'नुं सुविशुद्ध हृदये वाचन—मनन करी ते ते महापुरुषोना जीवन प्रसंगोमांथी आत्महितकारक तत्त्वोने भव्यजीवो आत्मसात् करे अने ते द्वारा विपुल कर्मनिर्जरा साधी वहेलामां वहेला श्री सिद्धिपदना स्वामी बने एज एक शुभाभिलाषा साथे प्रस्तावनाने पूर्ण करुं छुं अने आ प्रस्तावनामां श्री जिनाज्ञाथी विपरीत कंई पण लखायुं होय तेनी क्षमा याचुं छुं.

पूज्यपाद, सुविशालगच्छाधिपति, व्याख्यानवाचस्पति, आचार्यदेव श्रीमद्

**विजयरामचन्द्रसूरीश्वरजी महाराजाना** पट्टधर, प्रशांतमूर्ति,

स्व. आचार्यदेव श्रीमद् **विजयजितमृगांकसूरीश्वरजी महाराजनो**

चरणकिंकर **मुनि हेमभूषण विजय**

वि. सं. २०३६
फाल्गुन शुक्ल ६, गुरु
कंबोई. (उ. गु)

## पाठांतरो लेवा माटे उपयोगमां लेवायेली प्रतिओनो परिचय तेमज संकेतसूचि

परिशिष्ट पर्वनी नीचे जणावेली ३ प्राचीन हाथपोथीओनो उपयोग आ ग्रन्थना संशोधन-संपादनमां करवामां आव्यो छे. पाठान्तरो दर्शावतां त्यां त्यां *C*-1., *C*-2., *C*-3., *M* अेवी संज्ञाओ सूचववामां आवी छे तेनो परिचय अहि आपवामां आवे छे.

(१) *C*-1. आ संज्ञाथी सूचवेली पोथी खंभातना श्री जैनशाला स्थापित नीतिविजयपुस्तकालयनी पोथी नं. १४१, प्र.नं. ६०० छे. ते प्रति ६८ पत्रनी छे. ६८ मा पत्रनी पाछळनो भाग कोरो छे. पडिमात्रामां मध्यम अक्षरोमां लखायेली छे. क्यांक क्यांक अशुद्ध छे तेमज शब्दो छूटी पण गया छे. किनारो पर तेमज हांसियामां क्यांक क्यांक सुधारेल छे. पोथीनी लंबाई १०॥ इच तेमज पहोळाई ४॥ इंचनी छे. दरेक तरफना भागमां १५ थी १६ पंक्तिओ छे. दरेक पंक्तिमां प्रायः ५२थी ५३ अक्षरो छे. एकंदरे प्रति सुवाच्य छे. प्रतिमां प्रशस्ति वगेरे कंईज न होवाथी पोथी लखायानो निश्चित समय जाणवानुं कोइ साधन उपलब्ध नथी. अन्तिम पृष्ठ पर पाछळथी कोई व्यक्तिद्वारा 'संवत् १६८० वर्षे वाचिता XX विजय' आटलुं लखाण उमेरायेल छे, जे सूचवे छे के आ पोथी १७मी शताब्दिथी पूर्वनी होवी जोईये. आ पोथी संपादनमां मुख्यतया आधारभूत थयेली छे.

(२) *C.2.* आ सञ्ज्ञाथी सूचवेली पोथी पण खंभातना उपरोक्त भंडारनी पोथी नं. २२६, प्रत नं. १८७८, पत्र ५२ सवत् १५८४ मा वर्षमां लखायेली छे. प्रति उधई, अन्य जीवात तेमज वरसादना पाणीथी अनेक स्थळे खंडित थई गयेली छे. प्रतिनी लंबाई १३॥ इंच तेमज पहोळाई ५। इंच छे. श्लोकना क्रमांकोने पाछळना कोई वाचके लाल पेन्सीलथी रंगेल छे. क्यांक क्यांक पाठो रही पण गया छेः ४६ थी ५२ सुधीना पृष्ठोनो उपरनो भाग तो पाणीथी लगभग क्षतविक्षत बनी गयेल छे. पडिमात्रामां, मनोहर अक्षरोमां, शुद्धाशुद्ध लखायेली प्रस्तुत पोथीमां प्रत्येक पत्रमां बन्ने बाजु मळी लगभग ३४ पंक्तिओ अने प्रत्येक पंक्तिमां प्रायः ७२ अक्षरोनो समावेश करेलो छे.

(३) *C-3.* आ संज्ञाथी सूचवेली पोथी पण खंभातना उपरोक्त भंडारनी पोथी नं. १४१, प्र. नं. ६०१, पत्र ६९ नी छे. १ ला पत्रनो आगळनो भाग कोरो छे पाछळना भागथी ग्रन्थनो आरंभ करायो छे. ६९मा पत्र पर लखावनारनुं नाम लाल शाहीथी लखायेलुं छे. जेने पाछळना कोईके काळी शाहीथी भूंसी नाख्युं छे. तेमज लेखनसंवत्ने पण भूंसी नाखी छे मात्र १ वंचाय छे. जे नगरमां लखाई ते नगरनुं नाम पण भूंसी नखायुं छे, प्रतिना हांसियाना भागमां तेमज उपर नीचे पण शब्दोना अर्थो तेमज सुधारा आपवामां आव्या छे. हांसियाने त्रण त्रण लाल पंक्तिथी जूदो पडायो छे पोथीनी लंबाई १०॥ इंच तेमज पहोळाई ४॥ इंचनी छे. दरेक पृष्ठमां १९ पंक्तिओ छे. दरेक पंक्तिमां प्रायः ४५ अक्षरो छे.

(४) *M.* आ संज्ञावाळी पोथी जैनधर्मप्रसारकसभा भावनगर द्वारा विक्रमसंवत् १९६८ मां प्रकाशित छे. जे ११८ पत्रात्मक तेमज निर्णयसागर मुद्रणालयमां मुद्रित थयेल छे. तेमां कोई पाठान्तरो नोंधवामां आवेल नथी, मात्र कठिन शब्दोना अर्थो अपाया छे ग्रन्थनी प्रेसकोपी तरीके आ प्रतिनो उपयोग करायो छे. एकंदरे आ प्रति घणी शुध्ध छे. परन्तु आ प्रति मुद्रित करती वेळा कयी पोथीओ परथी ते मुद्रित कराई तेनो कोई उल्लेख तेमां सांपडतो नथी.



# संपादकीय

श्रुतज्ञान प्रकाशनमालाना द्वितीय पुष्प तरीके आ परिशिष्ट पर्वनुं संपादन ज्यारे मने सोंपायुं त्यारे मने आ कार्य मारा माटे गजा उपरवटनुं लाग्युं हतुं. कारण के त्रण प्राचीन हस्तप्रतो आंख सामे राखी दरेक प्रतिना महत्त्वना पाठभेदो नोंधवा अने आ कार्य एकले हाथे करवुं दुष्कर हतुं, छतांय घणा समयने अंते, गुरुकृपाथी ते कार्य ज्यारे पार पड्युं त्यारे मने अपूर्व आनंद तो थयो ज हतो परन्तु एक भारेखम कार्य पार पड्यानी निरांत पण में अनुभवी हती.

नीतिविजयशास्त्रसंग्रह--खंभातनी--त्रण प्रतिओ पाठांतरोना संग्रह माटे प्राप्त कराई हती, जेनो ग्रन्थमां *C.* 1, 2 तथा 3 तरीके उल्लेख करवामां आवेल छे. त्रणेय प्रतिओमां संपूर्ण शुध्ध कहेवाय तेवी एक पण प्रति न हती. कोईक प्रतिमां श्लोको ज छूटी गया हता. कोईकमां क्यांक क्यांक पदो तथा वाक्यो छूटी गया हता. आ सर्व स्थिति छतां यथाशक्य शुध्ध करी आ प्रकाशन तैयार करायुं छे.

त्रिषष्टिशलाका पुरुषचरित्रना दशपर्वोंनी रचना द्वारा भगवान् श्री ऋषभदेवथीय पूर्वकालना इतिहासथी आरंभी भगवान् श्री वीरवर्धमानस्वामी पर्यंतनो इतिहास आप्या बाद चरमतीर्थपतिनी पाट परंपरामां थयेला पैकी मूल पाट उपर आवेला स्थविर भगवतोनो इतिहास परिशिष्ट पर्वमां आपवानो ग्रन्थकार भगवंते प्रयास कर्यो छे. परिशिष्ट पर्वने बाद

करतां आवो विगतवार कडीबध्ध प्रयास बीजा कोइ ग्रन्थमां जोवा मळतो नथी. हा, कोई ग्रन्थकारे कोई कोई स्थविर भगवंतनुं विगतवार चरित्र आलेख्युं छे परन्तु आखी स्थविरावली आ रीते आलेखाई नथी. ए दृष्टिए पण आनुं मूल्य वधी जाय छे.

कलिकालसर्वज्ञ, भगवान् श्री हेमचन्द्रसूरीश्वरजी माटे कंइ पण लखवुं ए विचार पण बालिशता लागे छे: जैन गगनांगणमां सहस्रकिरणे प्रकाशता ए झळहळता सूर्यनी ओळखाण कराववानी शी होय ? ए सूर्य न उग्यो होत तो शुं थात ? ते वात, ते समयनी राष्ट्नी स्थिति, विधर्मीओना जालिम जुल्मो, जैनो प्रत्येनो कट्टर द्वेष आ बधुं सारी रीते जाणनारथी अजाणी नथी. भगवान् श्रीहेमचन्द्रसूरीश्वरे आ बधुं पासुं पोतानी हयाति द्वारा पलटावी नाख्युं. अेमने जेटला विशेषणो आपीअे ते सर्व ओछा छे. अेमना चरणमां वंदना करवी ए पण आपणा संसारने टूंको करवानो मार्ग छे.

## प्रस्तुत प्रकाशन अंगे–

मारा धर्ममित्र श्री प्राणलालभाई के जेमणे आ ट्रस्ट उभुं कर्युं तेमना मारी शक्तिओ परना वधु पडता विश्वासे, आ कार्य मारे ज करवानुं आव्युं. मारा पोताना पठन पाठनादि कार्योमांथी हुं समय फाजल पाडी शकुं तेम न होवा छतांय तेमना स्नेहभर्या आग्रहथी आ कार्य मारे करवुंज पड्युं छे. पाठांतरो मारे एकले हाथेज लेवाना हता तेथी तेमां खासो समय गयो छे. छेवट, त्रिषष्टिदशमपर्वना प्रकाशन बाद पूरा त्रण वर्षे आ बीजुं प्रकाशन प्रगट थई शक्युं छे. अेटले आ विलंबमां दोषपात्र हुं छुं. पाठभेदोना योगे क्यांक क्यांक अर्थो केवा बदलाय छे तेनुं विवेचन हुं करुं ते करतां आ ग्रन्थनुं साद्यन्त पठन करनारा भाग्यवानो पोतेज समजी शकशे एटले ए अंगे लखवुं जरुरी नथी.

आ प्रकाशन पाछळ अनेक भाग्यवंतोनो सहकार छे. कोने कोने याद करवा ? छतांय आ ट्रस्टनुं सर्जन करवा माटे पोताना परिग्रहनी मात्रा अतिघणी घटाडी, सारी अेवी रकमनो न्यास करनार सुश्रावक श्री प्राणलालभाई कापडिआनो अने आ परिग्रह घटाडवानो उपदेश आपनार, मारा परमगुरुवर्य, कलिकालमां सुविशुध्ध देशनाना दानमां, तेमज श्री जिनशासनने पोतानी रगरगमां परिणमाववामां अने सन्मार्गथी विरुद्ध लागती अनेक प्ररूपणाओनो स्वपरना पक्षपात वगर प्रखर विरोध करवामां जेमनी कोई जोड नथी एवा युगप्रधान तुल्य, अनेकने दुर्गतिमां जता रोकनार, परमपूज्य, श्रीश्रीश्री **आचार्यदेव श्रीमद्‌विजयरामचन्द्रसूरिभगवंतनो** उपकार अने सहकार कोईज क्षणे भूलाय तेम नथी.

प्रान्ते—आ ग्रन्थनी विद्वद्भोग्य प्रस्तावना लखी आपवा बदल तेमज ग्रन्थनुं अक्षरशः वाचन करी शुद्धिपत्रक तैयार करी आपवा बदल पूज्य मुनिराज श्रीहेमभूषणविजयजी महाराजनुं ट्रस्ट ऋणी छे.

प्रस्तुत संपादन करती वेळाए रही गयेली क्षतिओ तरफ ध्यान दोरवा विद्वानोने विनंति छे.

आ ग्रन्थना प्रकाशनमां जे कंई जिनाज्ञाविरुध्ध थवा पाम्युं होय तेनो त्रिविधे मिच्छामिदुक्कडं आपी आ महाकाव्यना वाचनथी अनेक आत्माओ निर्मल बोधिबीजने प्राप्त करो एज एक अभिलाषा.

द्वि. ज्येष्ठ शु. प्रतिपदा, शुक्र
विलेपारले, मुंबई.

**सुबोधचन्द्र नानालाल शाह**

# विषयानुक्रमः

णमोऽत्थु णं समणस्स भगवओ महावीरस्स ।

कलिकालसर्वज्ञ–आचार्यशिरोमणि–श्रीमद् हेमचन्द्रसूरीश्वरविरचितं

# श्री परिशिष्टपर्व ।



तत्र चायं

## प्रथमः सर्गः

श्रीमते वीरनाथाय सनाथायाद्भुतश्रिया । महानन्दसरोराजमरालायार्हते नमः ॥१॥
सर्वेषां वेधसामाद्यमादिमं परमेष्ठिनाम् । देवाधिदेवं सर्वज्ञं श्रीवीरं प्रणिदध्महे ॥२॥
कल्याणपादपारामं श्रुतगङ्गाहिमाचलम् । विश्वाम्भोजरविं देवं वन्दे श्रीज्ञातनन्दनम् ॥३॥
पान्तु वः श्रीमहावीरस्वामिनो देशनागिरः । भव्यानामान्तरमलप्रक्षालनजलोपमाः ॥४॥
त्रिषष्टिशलाकापुंसां दशपर्वी विनिर्मिता । इदानीं तु परिशिष्टपर्वास्माभिः प्रतन्यते ॥५॥
अत्र च जम्बूस्वाम्यादिस्थविराणां कथोच्यते । विश्वस्य कण्ठालङ्कारकृते हारावली शुभा ॥६॥

अस्यैव जम्बूद्वीपस्य भरतार्धेऽत्र दक्षिणे । देशोऽस्ति मगधाभिख्यो वसुधामुखमण्डनम् ॥७॥
तस्मिन्ग्रामोपमा गोष्ठा ग्रामाश्च पुरसन्निभाः । पुराणि खेचरपुरप्रायाण्यद्भुतया श्रिया ॥८॥
अप्येकवारमुप्तानि लूनान्यपि हि कर्षकैः । तत्र धान्यानि दूर्वावत्प्ररोहन्ति मुहुर्मुहुः ॥९॥
निरामया निरातङ्काः सन्तुष्टाः परमायुषः । वसन्ति तत्र सुषमाकालजाता इव प्रजाः ॥१०॥
सदा प्रश्नवशालिन्यः कुण्डोध्न्यस्तत्र सुव्रताः[1] । अहर्निशं कामदोह्या गावः कामगवीनिभाः ॥११॥
सर्वत्राप्युर्वरैवोर्वी काले वर्षति वारिदः । धर्मकर्मरतो लोकस्तत्र धर्मैकसद्मनि ॥१२॥
याम्यस्य भरतार्धस्य सर्वस्वनिधिभूरिव । श्रियः क्रीडागृहं राजगृहं तत्रास्ति पत्तनम् ॥१३॥
तत्र चैत्येषु सौवर्णध्वजकुम्भमरीचयः । प्रावृष्यासीनमेघानां तडित्सापत्न्यमीर्यति ॥१४॥
तत्र चन्द्राश्मवासौकःसंक्रान्तः शशभृन्निशि । धत्ते कस्तूरिकापूर्णमुक्तराजतपात्रताम् ॥१५॥
प्राकारः सुन्दराकारस्तत्र राजति काञ्चनः । अर्हत्समवसरणादेकः कृत इवामरैः ॥१६॥
दीर्घिकासलिलं तत्र मिलद्भिः पार्श्वयोर्द्वयोः । आभाति रत्नसोपानमयूखैर्बद्धसेत्विव ॥१७॥
तत्र चैकातपत्रार्हद्धर्मे हर्म्येषु बालिकाः । नित्यमध्यापयन्त्यर्हत्स्तुतीः क्रीडाशुकानपि ॥१८॥

1 प्रस्नव C 3। प्रस्रव° M ॥
*सुव्रता=सुखदोह्या ।

शिरोदेशपरिस्पृंशि तत्रोच्चैर्जिनसद्मनाम् । स्वर्णकुम्भाविभक्तश्रीण्युडून्याभान्ति रात्रिषु ॥१९॥
तत्र राजतसौवर्णैः प्राकारः कपिशीर्षकैः । भाति चन्द्रांशुमद्बिम्बैर्मर्त्योत्तर इवाचलः ॥२०॥
तत्र वासगृहे प्लुष्टधूपगन्धाधिवासितः । प्रेयानिव लगन्नङ्गे खेचरीणां मुदेऽनिलः ॥२१॥
श्रेणीकृतयशास्तत्र श्रेणिकोऽभून्महीपतिः । नेतेव दक्षिणः क्षोणीं लक्ष्मीं चावर्जयन् गुणैः ॥२२॥
सम्यक्त्वरत्नोद्योतेन हृदि तस्य प्रसर्पता । मिथ्यात्वतिमिरस्यावकाशो नाभून्मनागपि ॥२३॥
कर्णपेया सुधेवान्या द्युसदां ददती मुदम् । मध्येसुधर्म तत्कीर्तिरप्सरोभिरगीयत ॥२४॥
केन्द्रे दुष्टग्रह इव तस्मिन्प्रातीप्यवर्तिनि । अनर्थं कलयामासुः परितः परिपन्थिनः* ॥२५॥
अखण्डशासने राज्ञि तस्मिन्नाखण्डलोपमे । एकातपत्रैवाभूद् भूर्द्यौरिवैकनिशाकरा ॥२६॥
औदार्यधैर्यगाम्भीर्यशौर्यप्रभृतयो गुणाः । सामुद्रलक्षणानीव जन्मतस्तस्य जज्ञिरे ॥२७॥
विदधानस्य वसुधामेकच्छत्रां महौजसः । तस्याज्ञा वज्रिणो वज्रमिव नाऽस्खलि केनचित् ॥२८॥

एकदा तत्पुराभ्यर्णे चैत्ये गुणशिलाह्वये । सुरासुरपरीवारः श्रीवीरः समवासरत् ॥२९॥
रूप्यस्वर्णमणिमयैः प्राकारैर्भूषितं त्रिभिः । चक्रुः समवसरणं तत्प्रदेशे तदाऽमराः ॥३०॥
अशोकवृक्षस्तस्यान्तर्विचक्रे व्यन्तरामरैः । पल्लवैः पवनोद्भूतैर्भव्यजन्तूनिवाह्वयन् ॥३१॥

*शत्रव.।

सुमेरुरिव पुंरूपो जात्यजाम्बूनदद्युतिः । तस्मिन्समवसरण पूर्वद्वाराऽविशद्विभुः ॥३२॥
अशोकाधःस्थिते देवच्छन्दे स्वामी यथाविधि । सिंहासनमलञ्चक्रे राजहंस इवाम्बुजम् ॥३३॥
निषसाद यथास्थानं सङ्घस्तत्र चतुर्विधः । स्वाम्यप्यमृतवृष्ट्याभां प्रारेभे धर्मदेशनाम् ॥३४॥
तद्देशवासिनस्तूर्णं प्लवमाना मृगा इव । स्वामिनं समवसृतमेत्य राज्ञे व्यजिज्ञपन् ॥३५॥
राज्ञः पीतवतो नाथागमोदन्तामृतं तदा । वपुः पनसफलवदुत्कण्टकमभून्मुदा ॥३६॥
सिंहासनं पादुके च विहाय मगधाधिपः । स्वामिनं मनसिकृत्यानमद् भून्यस्तमस्तकः ॥३७॥
स्वाम्यागमनशंसिभ्यो भूपालः पारितोषिके । हिरण्यमनृणीकारकारणं प्रचुरं ददौ ॥३८॥
अर्हद्वन्दनयात्रार्हे सदशे श्वेतवाससी । क्षीरोदलहरीव्यूते इव राजाऽथ पर्यधात् ॥३९॥
तदा च रत्नाभरणैरामुक्तैर्मुकुटादिभिः । अनल्पैः कल्पशाखीव रेजे राजगृहेश्वरः ॥४०॥
हस्त्यश्वादीनि यानानि राजद्वारे तदाज्ञया । सज्जीकृतान्यढौकन्त द्राग् ज्ञातय इव श्रिया ॥४१॥
कल्याणकारणं भद्रकुञ्जरं नृपकुञ्जरः । अथाऽऽरुरोह तेजस्वी पूर्वाचलमिवार्यमा ॥४२॥
कुम्भिभिर्नवसिन्दूरारुणकुम्भैरनेकशः । सन्ध्याभ्रविभ्रमकरैः परिवव्रे नृपद्विपः ॥४३॥
गजघण्टाटणत्कारैः पूरयन्परितोऽम्बरम् । प्राचालीदचलानाथस्तीर्थनाथमनूत्सुकः ॥४४॥
गजेन्द्रगर्जितैरश्वहेषितैरथ चीत्कृतैः । मिलद्भिरम्बरतले शब्दोऽम्बरगुणोऽभवत् ॥४५॥

राज्ञोऽग्र्यसैनिकौ च द्वावेकमेकाग्रमानसम् । एकांह्रिणा तस्थिवांसमेकमूलमिवांह्रिपम् ॥४६॥
सिद्धिक्षेत्रमिवाक्रष्टुमुदञ्चितभुजद्वयम् । आदर्श इव सूर्येऽपि निष्कम्पन्यस्तलोचनम् ॥४७॥
उद्भिन्नस्फोटकमिवार्कतापात्स्वेदबिन्दुभिः । शान्तरसं मूर्तमिव शान्तं ददृशतुर्मुनिम् ॥ (त्रिभिर्विशेषकम्)

तयोरेकतरोऽवादीदहो ! मुनिमतङ्गजः । वन्दनीयो महात्माऽयं य एवं तप्यते तपः ॥४९॥
कस्तिष्ठेदेकपादेन कः पश्येदर्कमण्डलम् । मुहूर्तमप्येवमहो ! अहो ! दुष्करकारिता ॥५०॥
स्वर्गो वा यदि वा मोक्षो नास्य दूरे महात्मनः । भूयसा तपसा किं किं नासाध्यमपि साध्यते ? ॥५१॥
व्याजहार द्वितीयोऽपि न जानासि वयस्य ! किम् । राजा प्रसन्नचन्द्रोऽयं न धर्मोऽस्य मुधा तपः ॥५२॥
अयं हि बालं तनयं न्यधाद्राज्ये स मन्त्रिभिः । प्रच्यावयिष्यते राज्यादामं फलमिव द्रुमात् ॥५३॥
अनेन हि निजं राज्यं रक्षणाय समर्पितम् । मार्जाराणामिव क्षीरं तेषामेव दुरात्मनाम् ॥५४॥
तस्मिन्नुच्छेदिते बाले वंशो नास्त्यस्य सर्वथा । स्वपूर्वजन्मनां नामनाशनादेष पातकी ॥५५॥
प्रविव्रजिषुणाऽनेन याश्च तत्यजिरे प्रियाः । न जाने का गतिस्तासामनाथानां भविष्यति ॥५६॥
तद्वचोवात्यया कर्णकोटरेण प्रविष्टया । प्रसन्नचन्द्रराजर्षेः समाधिद्रुरभज्यत ॥५७॥
दध्यौ चैवं स राजर्षिरहो ! तेषां कुमन्त्रिणाम् । सन्मानो यो मयाऽकारि स भस्मनि हुतं ध्रुवम् ॥५८॥
मत्सूनोः क्षीरकण्ठस्य तैः शठैः पापकर्मभिः । राज्यमाच्छेत्तुमारेभे धिक् तान्विश्वस्तघातकान् ॥५९॥

तत्राहमभविष्यं चेत्तदा तेषां दुरात्मनाम् । अकरिष्यं नवनवैर्निग्रहैरनुशासनम् ॥६०॥
जीवितेनामुना किं मे तपसा भूयसाऽपि किम् । श्रुतिगोचरमायासीत्स्वसूनोर्यत्पराभवः ॥६१॥
एवं राजर्षिरारोहद् दुर्ध्यानमधिकाधिकम् । आविष्टः क्रोधभूतेन श्रामण्यं व्यस्मरन्निजम् ॥६२॥
सिंहावलोकनन्यायेनालीढः क्षत्रतेजसा । प्रत्यक्षानिव सोऽद्राक्षीत्तानमात्यान्सुतद्विषः ॥६३॥
पूर्ववद्रणरङ्गैकसूत्रधारोऽसिधारया । मनसा खण्डशश्चक्रे तान् रणे सूरणानिव ॥६४॥
छेदनं भेदनं चान्यदपि दुःकर्म दारुणम् । क्रोधान्धो मनसाऽकार्षीद्राजर्षिः किं न मन्त्रिणाम् ? ॥६५॥

तत्र प्रदेशे च तदा राजा राजगृहेश्वरः । आजगाम जिनोपज्ञधर्मद्रुमविहंगमः ॥६६॥
उत्ततार मुनिं दृष्ट्वा कुञ्जराद्राजकुञ्जरः । भालं तिलकयन्भूमिरेणुना प्रणनाम च ॥६७॥
उद्बाहुमेकपादस्थं तं दृष्ट्वाऽऽतापनापरम् । अमोदिष्टान्वमोदिष्ट चात्यर्थं पार्थिवाग्रणीः ॥६८॥
प्रसन्नचन्द्रराजर्षेस्तपःसामर्थ्यमद्भुतम् । चिन्तयन्नथ राजाऽगाज्जगद्गुरुजिनान्तिके ॥६९॥
प्रभुं प्रणम्य पञ्चाङ्गस्पृष्टभूर्भूभुजां वरः । निषसाद यथास्थानं पद्मकोशीकृताञ्जलिः ॥७०॥
समयेऽथ जगन्नाथं महीनाथशिरोमणिः । नत्वाऽपृच्छन्मुखद्वाररचितप्रच्छदाञ्चलः ॥७१॥
ध्यानस्थः समये यत्र प्रसन्नर्षिर्मयैक्ष्यत । तत्रैव चेद्विपद्येत तत्कामासादयेद् गतिम् ॥७२॥
स्वाम्याख्यात्तत्र समये कृतकालो व्रजेन्नृपः । प्रसन्नचन्द्रो राजर्षिः सप्तमीं नरकावनिम् ॥७३॥

श्रमणोपासको राजा ऋजुधीरित्यचिन्तयत् । अप्युग्रतपसोऽमुष्य गतिः कथं महामुनेः ? ॥७४॥
नृपो भूयोऽपि पप्रच्छ समयेऽस्मिन्महामुनिः । स कालं यदि कुर्वीत कां लभेत ततो गतिम् ॥७५॥
प्रभुः प्रोवाच हे राजन् ! स राजर्षिर्महातपाः । सर्वार्थसिद्धिगमनयोग्यः सम्प्रति वर्तते ॥७६॥
राजा जगाद भगवन्किमियं व्याकृतिर्द्विधा । समाख्याहि समाज्ञस्य सार्वज्ञी वाक्कुतोऽन्यथा ॥७७॥
स्वाम्याचख्यौ यदा राजन् ! राजर्षिर्वन्दितस्त्वया । रौद्रध्यानी तदा सोऽभूच्छुक्लध्यानी तु सम्प्रति ॥७८॥
स तदा नरकार्होऽभूद्रौद्रध्यानपरायणः । सर्वार्थसिद्धियोग्यस्तु शुक्लध्यानपरोऽधुना ॥७९॥
ज्ञानालोकार्कमर्हन्तं पप्रच्छ श्रेणिकः पुनः । रौद्रध्यानी कथमभूच्छुक्लध्यानी कथं च सः ॥८०॥
स्वाम्यप्युवाच राजंस्त्वदग्रसैनिकवार्तया । शुश्रावाभिभवं सूनोर्मन्त्रिभ्यः स्वेभ्यः एव सः ॥८१॥
स्पृष्टः सुतममत्वेन प्रसन्नो विस्मृतव्रतः । मनसा योद्धुमारेभे तैः समं क्रूरमन्त्रिभिः ॥८२॥
प्रत्यक्षैरिव तैः सार्धं युध्यमानोऽधिकाधिकम् । निष्ठितास्त्रः प्रसन्नोऽभूदप्रसन्नमनाः क्रुधा ॥८३॥
स सन्नद्धं स्वमज्ञासीदिति चाचिन्तयत्क्रुधा । शिरस्त्रेणापि हन्म्येतान्सर्वं शस्त्रं हि दोष्मताम् ॥८४॥
ततश्च शिरसि न्यास्यच्छिरस्त्रादित्सया करम् । तं लुञ्चितं स्पृशन्नात्तव्रतमात्मानमस्मरत् ॥८५॥
अचिन्तयच्च धिग्धिग्मां रौद्रध्यानानुबन्धिनम् । किं तेन सूनुना किं तैर्मन्त्रिभिर्निर्ममस्य मे ॥८६॥
इति चिन्तयतस्तस्य विलीने मोहदुर्दिने । विवेकभास्करः प्रादुरभूद् भूयोऽपि भास्वरः ॥८७॥

भक्त्या तत्रैव वन्दित्वा सोऽस्मानग्रे स्थितानिव । आलोच्याथ प्रतिक्रम्य प्रशस्तं ध्यानमास्थितः ॥८८॥
प्रसन्नचन्द्रो राजर्षिः शुभध्यानकृशानुना । कर्मकक्षमुवोष*द्राग्दुर्ध्यानारण्यसंभवम् ॥८९॥

श्रेणिकस्तस्य राजर्षेश्चरितेन सुगन्धिना । वासितः श्रीमहावीरं धर्मवीरो व्यजिज्ञपत् ॥९०॥
अपि बालं सुतं राज्ये विनिवेश्य विशांपतिः । प्रसन्नचन्द्रो भगवन् ! प्रव्रज्यामाददे कथम् ? ॥९१॥
अथाख्यद्भगवान् राजन्नगरे पोतनाभिधे । अभूत्सौम्यतया चंद्रः सोमचन्द्रो महीपतिः ॥९२॥
सधर्मचारिणी तस्य धारिणी धर्मधारिणी । बभूव शीलालङ्कारा विवेकजलदीर्घिका ॥९३॥
सा गवाक्षेऽन्यदा पत्युरासीनस्य कचोच्चयम् । स्वयं करसरोजाभ्यां विवरीतुं प्रचक्रमे ॥९४॥
ददर्श च तदा राज्ञः पलितं मूर्ध्नि धारिणी । स्थानं स्वीकृत्यभिज्ञानं जरयेव निवेशितम् ॥९५॥
व्याजहार च राजानं स्वामिन् ! दूतोऽयमागतः । दिशोऽवलोक्य राजाऽपि प्रोचे किं नेह दृश्यते ? ॥९६॥
राज्ञ्यथादर्शयद्राज्ञः पलितं मूर्ध्न्युवाच च । प्राणेश ! केशराजोऽयं प्रशस्यो धर्मदौत्यकृत् ॥९७॥
तृतीयवयसः शस्त्रमिव यौवनघातकम् । तन्मूर्ध्नि पलितं दृष्ट्वा राजा दुरमनायत ॥९८॥
अभ्यधाद्धारिणी देव ! किं वृद्धत्वेन लज्जसे ? । अप्येकं पलितं दृष्ट्वा यद्येवं दुर्मनायसे ॥९९॥
पटहोद्घोषणां कृत्वा लोकः सर्वो निषेत्स्यते । न यथा वृद्धभावं ते वार्तयाऽपि प्रकाशयेत् ॥१००॥

*ददाह

राजा प्रोवाच जिह्नेमि नाहं पलितदर्शनात्। दौर्मनस्ये पुनरिदं कारणं जीवितेश्वरि ! ॥१०१॥
अदृष्टपलितैरस्मत्पूर्वजैराददे व्रतम्। अहं तु विषयासक्तः प्रिये पलितवानपि ॥१०२॥
अहमह्नाय गृह्णामि व्रतमेवं स्थितेऽपि हि। किं तु दुग्धमुखे सूनौ राज्यमारोप्यते कथम् ? ॥१०३॥
यद्वा मे व्रतमादित्सोः किं राज्येन सुतेन किम्। धीमति ! व्रतमादास्ये त्वं स्वं संवर्धयाऽऽत्मजम् ॥१०४॥
धारिण्यभिदधे नाहं त्वां विना स्थातुमीश्वरी। सत्यः पत्यनुयायिन्यः समये यत्र तत्र वा ॥१०५॥
तद्बालेऽपि सुते राज्यं निदधीथा अहं पुनः। शुश्रूषिष्ये वनेऽपि त्वां देहच्छायेव पार्श्वगा ॥१०६॥
अरण्यजस्तरुरिव सुतः स्वैरेव कर्मभिः। प्रसन्नचन्द्रो बालोऽपि वर्धतां तेन किं मम ॥१०७॥
सोमचन्द्रस्ततो राज्यमारोप्य तनुजन्मनि। दिक्प्रोषितस्तापसोऽभूत् पत्न्या धात्र्या च संयुतः ॥१०८॥
स आश्रमपदं किञ्चिच्चिरशून्यमशिश्रयत्। दुस्तपं च तपस्तेपे शुष्कपत्रादिभोजनः ॥१०९॥
पलाशपत्राण्यादाय स आश्रमकुटीं व्यधात्। मृगाणामध्वगानां च शीतच्छायाऽमृतप्रपाम् ॥११०॥
स्वादुस्वादून्युदक्कानि वनस्पतिफलानि च। सोमेन्दुरानयत्पत्न्यै स्यूतस्तत्प्रेमतन्तुभिः ॥१११॥
तत्रापि धारिणी सा तु पत्यावत्यन्तभक्तिभाक्। तल्पं प्रकल्पयामास तदर्थं कोमलैस्तृणैः ॥११२॥
तत्रेङ्गुदानि पक्वानि पेषं पेषं च धारिणी। स्नेहं जग्राह दिवसे चक्रे च निशि दीपकान् ॥११३॥
अरण्यगोमयैरार्द्रैः सा लिलेपाऽऽश्रमाङ्गणम्। पत्युः सुखासिकाहेतोर्मार्जयामास चासकृत् ॥११४॥

तत्राश्रमे दम्पती तौ लालयन्तौ मृगार्भकान् । तपःकष्टमजानन्तौ कञ्चित्कालं व्यतीयतुः ॥११५॥
सन्तोषसुखधारिण्याः धारिण्याः पूर्वसम्भवः । तत्र क्रमेण ववृधे गर्भोऽनुत्पादितव्यथः ॥११६॥
धारिण्या सूनुरन्यूनलक्षणः सुषुवेऽन्यदा । कान्त्या दीप इवातैलपूरोऽन्तःसूतिकागृहम् ॥११७॥
आश्रमे वल्कलान्येवेत्यवेष्ट्यत स वल्कलैः । पित्रा वल्कलचीरीति ततस्तन्नाम कल्पितम् ॥११८॥
विपेदे धारिणी सूतिरोगेण तनयः पुनः । अदृष्टमातृकः सोऽभूत् पुमानिव निरक्षरः ॥११९॥
अरण्यमहिषीक्षीरं पाययित्वा मुहुर्मुहुः । सोमेन्दुरार्पयद्धात्र्या धारणाय तमर्भकम् ॥१२०॥
अवाप साऽपि पञ्चत्वं कालेन कियताऽपि हि । धात्री दैववशेनानुयियासुरिव धारिणीम् ॥१२१॥
अपीप्यन्महिषीक्षीरं सोमेन्दुस्तं शिशुं स्वयम् । यान्निषण्णः शयानो वा स्वयमङ्के दधार च ॥१२२॥
स क्रमाद्वर्धमानोऽभूत्पादचंक्रमणक्षमः । चक्रे च प्रत्यहं पांशुक्रीडां वनमृगार्भकैः ॥१२३॥
एधोभिः स्वयमानीतैर्नीवारैः स्वयमाहृतैः । स्वयं रसवतीं कृत्वा सोमेन्दुस्तमभोजयत् ॥१२४॥
वनधान्यैर्वनफलैः पोषं पोषं तमर्भकम् । सोमचन्द्रो व्यधादात्मसखं तपसि दुस्तपे ॥१२५॥
यौवनाभिमुखश्चालङ्कर्मीणः सर्वकर्मसु । पितृचर्याप्रवीणोऽभूदथ वल्कलचीर्यपि ॥१२६॥
फलाद्यानयनैर्नित्यमङ्गसंवाहनेन च । शुश्रूषां स पितुश्चक्रे सा हि सर्वव्रतोत्तमा ॥१२७॥
आजन्मब्रह्मचार्येव व्रती वल्कलचीर्यभूत् । स्त्रीणां नामापि नाज्ञासीदस्त्रीके निवसन्वने ॥१२८॥

प्रसन्नचन्द्रः शुश्राव वनस्थस्यान्यदा पितुः । धारिणीकुक्षिसम्भूतं सुतं सोदरमात्मनः ॥१२९॥
कीदृशोऽस्ति स मे भ्राता ? मिलिष्यति कथं पुनः ? । इत्यभूद्रणरणको राज्ञो मनसि दुर्धरः ॥१३०॥
अथादिशच्चित्रकरांस्तत्र यात तपोवने । यच्छ्रीमत्तातपादानां पादपद्मैरलङ्कृतम् ॥१३१॥
पितृपादाब्जहंसस्य मदीयस्यानुजन्मनः । वने निवसतो रूपमालिख्यानयत द्रुतम् ॥१३२॥
प्रमाणमादेश इति प्रोच्य चित्रकरा अपि । ययुस्तत्र वने पुण्यीकृते वल्कलचीरिणा ॥१३३॥
ते विश्वकर्मणो मूर्त्यन्तराणीवातिकौशलात् । तमालिखन्यथावस्थमादर्शप्रतिबिम्बवत् ॥१३४॥
आनीय दर्शयामासू रूपं वल्कलचीरिणः । ते चित्रकारिणो राज्ञः सुधावर्तिनिभं दृशोः ॥१३५॥
दध्यौ नृपतिराकृत्या मत्पितुर्नैष हीयते । आत्मा वै जायते पुत्रः श्रुतिरेषा हि नान्यथा ॥१३६॥
दिष्ट्या सोदर दृष्टोऽसीत्यभिधायासकृन्नृपः । तं सस्वजे मूर्ध्नि जघ्रौ न चाङ्कादुदतारयत् ॥१३७॥
वल्कलाच्छादनधरं दृष्ट्वा वल्कलचीरिणम् । उदश्रुर्द्रागभूद्राजा सनिर्झर इवाचलः ॥१३८॥
ऊचे च *प्रवयास्तातो युक्तमाचरतु व्रतम् । मद्भ्रातुस्त्वस्य बालस्य वनवासोऽपि नार्हति ॥१३९॥
अहं राज्यसुखह्रदे मग्नः क्रीडामि हंसवत् । पुलिन्द इव मे भ्राता वनवृत्त्याऽनुजीवति ॥१४०॥
अरण्यजो जीव इव दुरानेयः स पत्तने । कष्टं तु मम राज्येऽपि तस्मिन्नाज्याविभागिनि ॥१४१॥

*वृद्ध ।

वनकष्टमिति भ्रातुरनुशोचन्महीपतिः । एवमाज्ञापयामास वेश्याश्चातुर्यशालिनीः ॥१४२॥
मुनिवेषेण गत्वाऽङ्गस्पर्शनैर्वनवोक्तिभिः । प्रलोभ्य खाण्डैश्च फलैरिहानयत मेऽनुजम् ॥१४३॥
इति राजाऽऽज्ञया वेश्या मुनिवेषभृतो द्रुतम् । तदाश्रमपदं जग्मुः सोमचन्द्रेण सेवितम् ॥१४४॥
फलान्यादाय बिल्वादीन्यायान्तमृषिपुत्रकम् । वल्कलाच्छादनं तत्र ददृशुस्तं मृगीदृशः ॥१४५॥
मुनिवेषभृतां तासां सोऽकार्षीदभिवादनम् । ऋजुधीरित्यपृच्छच्च के यूयं ? को व आश्रमः ? ॥१४६॥
ताः प्रोचुर्वयमृषयः पोतनाश्रमवासिनः । तवागताः स्मोऽतिथयः किमातिथ्यं करिष्यसि ? ॥१४७॥
उवाच स फलान्येतान्याहृतानि मया वनात् । यूयमश्नीत पक्वानि मधुराणि महर्षयः ! ॥१४८॥
ताश्चोचुराश्रमपदेऽस्मदीये नेदृशान्यहो । फलानि कश्चिदश्नाति नीरसान्यतिनीरसः ॥१४९॥
अस्मदाश्रमवृक्षाणामीक्षस्व फलवर्णिकाम् । इत्युक्त्वा ता निषेदुर्द्रुमूले तं च न्यषादयन् ॥१५०॥
ताश्च तं प्राशयन् खण्डफलान्यविफलाशयाः । सोऽपि सद्यस्तदास्वादाद्बिल्वाद्युद्वेगभागभूत् ॥१५१॥
एकस्थानस्थितं तास्तं स्वाङ्गस्पर्शमचीकरन् । तत्करं च न्यधुः पीनकुचकुम्भे निजोरसि ॥१५२॥
स ऊचे कोमलमिदं किमङ्गं वो महर्षयः ? । किमुन्नते स्थले एते यौष्माकीणे च वक्षसि ? ॥१५३॥
ताः प्रोचुस्तं स्पृशन्त्यः स्वै. कोमलैः पाणिपल्लवैः । अस्मद्वनफलास्वादे हीदृक् स्यादङ्गमार्दवम् ॥१५४॥
आस्वादितैर्वनफलैरस्मदीयैर्महारसैः । अत्यन्तोपचयादेते जायेते हृदि च स्थले ॥१५५॥

तद्धिमुंचाश्रममिमममसाराणि फलानि च । अस्मदाश्रममागत्य त्वमप्यस्मादृशो भव ॥१५६॥
अथ खण्डफलास्वादलुब्धो वल्कलचीर्यपि । सङ्केतमग्रहीन्मुग्धस्ताभिः सह यियासया ॥१५७॥
संस्थाप्य तापसभाण्डमागाद्वल्कलचीर्यपि । यथोदितं च सङ्केतस्थानं ताभिरधिष्ठितम् ॥१५८॥
तदा च ददृशे वृक्षाधिरूढैश्चरपूरुषैः । आगच्छन्सोमचन्द्रार्षिरकथ्यत च योषिताम् ॥१५९॥
मा शाप्सीदेष इति तास्तस्माद्भीता द्रुतद्रुतम् । नेशुर्मृग्य इव व्याधादमिलन्त्यः परस्परम् ॥१६०॥
स्थानं गते च पितरि कुमारस्ताः पणाङ्गनाः । *नष्टस्वः †स्वमिवान्वेष्टुमुपाक्रंस्ताखिले वने ॥१६१॥
ददर्श रथिनं चैकं स धावन्मृगवद्वने । तमप्यृषिं मन्यमानोऽवदत्ताताभिवादये ॥१६२॥
रथ्यपृच्छत्कुमार ! त्वं क्व गमिष्यसि सोऽवदत् । गमिष्याम्याश्रमपदं महर्षे ! पोतनाभिधम् ॥१६३॥
रथ्यवादीदहमपि यियासुः पोतनाश्रमम् । ततोऽन्वगात्तमग्रेगूमिव वल्कलचीर्यपि ॥१६४॥
स तापसकुमारोऽपि पथि यान्रथिकप्रियाम् । रथाधिरूढां ताततेति भाषते स्म मुहुर्मुहुः ॥१६५॥
रथिनं तत्प्रियाऽवोचत् केयमस्योपचारगीः । यत्तापसकुमारोऽयं मयि तातेति जल्पति ॥१६६॥
रथिकः स्माह मुग्धोऽयमस्त्रीकेऽस्मिन्वने वसन् । स्त्रीपुंसयोरभेदज्ञो नरं त्वामपि मन्यते ॥१६७॥
प्रवीयमानान्दृष्ट्वाऽश्वानूचे वल्कलचीर्यदः । वाह्यन्ते किममी तात ! मृगा नार्हन्त्यदो मुनेः ॥१६८॥

* नष्टधन. । † धनमिव ।

व्याजहाराथ रथिकः स्मित्वा वल्कलचीरिणम् । हंहो कर्मेदमेवैषां मृगाणां नात्र दुष्यति ॥१६९॥
रथिको मोदकान्स्वादून्ददौ वल्कलचीरिणे । सोऽखादच्च तदास्वादसुखमग्नो जगाद च ॥१७०॥
ईदृशानि वनफलान्यहमग्रेऽप्यखादिषम् । महर्षिभिः प्रदत्तानि पोतनाश्रमवासिभिः ॥१७१॥
अभूच्च मोदकास्वादात्पोतनं गन्तुमुत्सुकः । कषायरूक्षैर्नेष्टितः स बिल्वामलकादिभिः ॥१७२॥
रथिनश्चाभवद्युद्धं चौरेणैकेन दोष्मता । रथी गाढप्रहारेण तं चौरं निजघान च ॥१७३॥
चौरोऽप्युवाच घातो हि वैरिणोऽपि प्रशस्यते । मामजैषीः प्रहारेण तेन तुष्टोऽस्मि मानव ! ॥१७४॥
विपुलं धनमत्रास्ति मदीयं तद् गृहाण भोः ! । त्रयोऽप्यारोपयामासुरथ तद् द्रविणं रथे ॥१७५॥
क्रमेण पोतनं प्राप्तो रथी वल्कलचीरिणम् । प्रोवाच प्रेप्सितो यस्ते पोतनाश्रम एष सः ॥१७६॥
किंचिच्च द्रविणं तस्मै रथी तापससूनवे । प्रददौ मार्गसुहृदे स्मयमानो जगाद च ॥१७७॥
अमुष्मिन्नाश्रमपदे न विना द्रव्यमाश्रयः । तदाश्रमार्थी कस्मैचिद्दद्याद् द्रव्यमवक्रये ॥१७८॥
किमत्र यामि याम्यत्र किं वेति सकले पुरे । उत्प्रेक्षमाणो हर्म्याणि बभ्राम मुनिपुङ्गवः ॥१७९॥
नराणामथ नारीणामृषिबुद्ध्या स मुग्धधीः । अभिवादनवातूल उपाहास्यत नागरैः ॥१८०॥
पुरे भ्रमन्नथैकस्या वेश्यायाः स निकेतने । विवेश त्वरितं चापमुक्तः शर इवास्खलन् ॥१८१॥
स तद्वेश्माश्रमं मेने वेश्यां मुनिममन्यत । इति तामप्युवाचैवं तात ! त्वामभिवादये ॥१८२॥

इति च प्रार्थयाश्चक्रे समर्प्य ममोटजम् । अमुष्यावक्रये द्रव्यं महर्षे ! गृह्यतामिदम् ॥१८३॥
त्वदीय उटजो ह्येष गृह्यतामित्युदीर्य सा । तदङ्गसंस्कारकृते *दिवाकीर्तिमजूहवत् ॥१८४॥
अनिच्छतोऽपि तस्यर्षेर्नापितो गणिकाऽऽज्ञया । शूर्पोपमान्पादनखानदुन्वन्नुदतारयत् ॥१८५॥
कृत्वा वल्कलचीरापनयनं सा पणाङ्गना । तं कुमारं स्नपयितुं †वराशिं पर्यधापयत् ॥१८६॥
आजन्म मुनिवेषं मे माऽपनैषीर्महामुने ! । स वल्कलापनयनादिति बाल इवारटत् ॥१८७॥
वेश्याऽवोचन्महर्षीणामतिथीनामिहाश्रमे । उपचारपदं ह्येतत्तत्प्रतीच्छसि किं न हि ? ॥१८८॥
त्वमस्मदाश्रमाचारानीदृशांश्चेत्प्रतीच्छसि । तदा हि लप्स्यसे वस्तुमुटजं मुनिपुत्रक ! ॥१८९॥
ततस्तद्वासलोभेन स तापसकुमारकः । नाङ्गमप्यधुनोन्मन्त्रवशीकृत इवोरगः ॥१९०॥
तत्केशपाशं जटिलं तैलेनाभ्यज्य सा स्वयम् । ऊर्णापिण्डमिव शनैर्विवव्र वरवर्णिनी ॥१९१॥
अभ्यज्य मृज्यमानाङ्गस्तया सोमेन्दुभूरभूत् । कण्डूय्यमान इव गौः सुखनिद्राणलोचनः ॥१९२॥
गणिका स्नपयित्वाऽथ कवोष्णैर्गन्धवारिभिः । तमामोचयदग्र्याणि‡वस्त्राण्याभरणानि च ॥१९३॥
तयैकस्या दारिकायाः पाणिग्रहमकारि सः । साऽभात्तस्य करगता गार्हस्थ्यश्रीरिवाङ्गिनी ॥१९४॥
वधूवरं च गायन्त्यः सर्वास्तस्थुः पणाङ्गनाः । दध्यावृषिकुमारस्तु ऋषयोऽमी पठन्ति किम् ? ॥१९५॥

* नापितम् । † स्थूलवस्त्रम् । ‡ श्रेष्ठानि ।

अवीवदच्च मङ्गल्यान्यातोद्यानि पणाङ्गना । किमेतदिति सम्भ्रान्तः व्यधात्कर्णौ च सोमभूः ॥१९६॥
मुनिवेषजुषो वेश्याः कुमारानयने गताः । यथागतास्तथैवैत्य तदोर्वीशं व्यजिज्ञपन् ॥१९७॥
तैस्तैः प्रकारैः प्रालोभि स कुमारो वनेचरः । इहाऽऽगन्तुं च सङ्केतमस्माभिः सममग्रहीत् ॥१९८॥
अप्यायान्तं तदा दूरे दृष्ट्वा तत्पितरं वयम् । तस्य शापभयान्नष्टाः कातराः स्त्रीस्वभावतः ॥१९९॥
सोऽस्मान् गवेषयन्नस्मत्प्रलोभनवशंवदः । भ्रमन्वनाद्वनं गामी न गामी पितुराश्रमम् ॥२००॥
*अनुशिश्ये विशामीशः किमकार्षमहं जडः । वियोगितौ पितापुत्रौ मया प्राप्तश्च नानुजः ॥२०१॥
पितृपार्श्वात्परिभ्रष्टो जीविष्यति कथं नु सः ? । कियच्चिरं जीवति हि मीनो नीराद्बहिष्कृतः ॥२०२॥
एवं दुःखादरतिभागभूद् भृशमिलापतिः । उद्वेल्लञ्शयनेऽप्यस्थान्मीनः स्तोक इवाम्भसि ॥२०३॥
वेश्यायाः सदने तस्यास्तदा च मुरजध्वनिः । कर्णयोरवनीभर्तुरप्रियातिथितां ययौ ॥२०४॥
ऊचे च राजा नगरं सर्वं मद्दुःखदुःखितम् । लोकोत्तरसुखी कोऽयं यस्याग्रे मुरजध्वनिः ॥२०५॥
स्वार्थनिष्ठोऽथवा सर्वो मृदङ्गध्वनिरेष हि । मुदे कस्यापि मम तु मुद्गराघातसन्निभः ॥२०६॥
सा राज्ञो वाग्जनश्रुत्या पानीयमिव कुल्यया । कर्णालवालं वेश्यायास्तस्यास्तूर्णमपूरयत् ॥२०७॥
प्रसन्नचन्द्रं राजानं साऽथ गत्वा कृताञ्जलिः । वेश्या विज्ञपयामास धाष्ट्योत्कृष्टप्रगल्भवाक् ॥२०८॥

*पश्चात्तापमकरोत् ।

पुरा मे देव ! दैवज्ञोऽकथयद्यस्तवौकसि । ऋषिवेषो युवाऽभ्येति दद्यास्तस्य निजां सुताम् ॥२०९॥
ऋषिवेषो युवा कोऽपि गोवन्न व्यवहारवित् । अभ्यागान्मद्गृहे सोऽद्योद्वाहितः सुतया स्वया ॥२१०॥
तद्विवाहोत्सवे देव ! गीतवाद्यादि मद्गृहे । दुःखिनं त्वां न जानामि यद्यागो मे सहस्व तत् ॥२११॥
अथादिशन्नरान्राजा कुमारं दृष्टपूर्विणः । उपलक्षयितुं तेऽपि गत्वोपालक्षयंश्च तम् ॥२१२॥
अथैत्य ते नरेन्द्राय तं तथैव व्यजिज्ञपन् । राजाऽपि दृष्टसुस्वप्न इवात्यर्थममोदत ॥२१३॥
तया समन्वितं वध्वा करेणुमधिरुह्य च । आनिनाय निजं वेश्म राजा वल्कलचीरिणम् ॥२१४॥
अखिलव्यवहारज्ञो राज्ञाऽकारि क्रमेण सः । पशवोऽपि हि शिक्ष्यन्ते नियुक्तैः किं पुनः पुमान् ॥२१५॥
तस्मै राज्यविभागं च दत्त्वा राजा कृतार्थभूत् । राजकन्याश्च तेनोदवाहयत्स्वर्वधूपमाः ॥२१६॥
वधूभिः सहितः ताभिरखण्डितसमीहितः । रेमे वल्कलचीर्युच्चैः सुखाब्धिजलकुञ्जरः ॥२१७॥
सोऽन्यदा रथिको मार्गसुहृद्वल्कलचीरिणः । तच्चौरदत्तं स्वर्णादि विक्रीणानोऽभ्रमत्पुरे ॥२१८॥
यद्यस्य यस्य चौरेणापहृतं स स तद्धनम् । उपलक्ष्यारक्षकाणामूर्ध्वबाहुरचीकथत् ॥२१९॥
संयम्य च स आरक्षै राजद्वारमनीयत । तं च राजानुजोऽद्राक्षीद् दृशा जीवातुकल्पया ॥२२०॥
तमुपालक्षयद्वल्कचीरी मार्गोपकारिणम् । अमोचयच्च सन्तो हि नोपकारस्य *घस्मराः ॥२२१॥

* खादका ।

सोमचन्द्रोऽपि पुत्रं स्वमपश्यन्नभ्रमद्वने । वृक्षाद् वृक्षं नेत्रजलैः सिञ्चन्निव निरन्तरम् ॥२२२॥
प्रसन्नचन्द्रप्रहितैर्नरैर्वल्कलचीरिणः । प्रवृत्तौ कथितायां च सोऽभूदुद्धानलोचनः† ॥२२३॥
परं सुतवियोगेन तेन तस्यातिरोदनात् । अह्नोऽपि रात्रीकरणमन्धत्वमुदपद्यत ॥२२४॥
स जरत्तापसोऽन्यैश्च तपःसब्रह्मचारिभिः । तापसैस्तपसः प्रान्ते फलादिभिरपार्यत ॥२२५॥
पूर्णेषु द्वादशस्वब्देष्वन्यदैवमचिन्तयत् । प्रसन्नचन्द्रावरजो रजन्यर्धे प्रबोधभाक् ॥२२६॥
विपेदे मन्दभाग्यस्य जातमात्रस्य मे प्रसूः । कुमारभृत्यामकरोत्तातोऽरण्ये वसन्नपि ॥२२७॥
अहर्निशं कटिस्थेन मया दूरं दुरात्मना । तपःकष्टादप्यधिकं कष्टमुत्पादितं पितुः ॥२२८॥
यावत्प्रत्युपकाराय क्षमीभूतोऽस्मि यौवने । दैवादिहागमं तावत्पापोऽहमजितेन्द्रियः ॥२२९॥
पितुरानृण्यभाग्नाहं भवाम्येकेन जन्मना । येनाहं सोढकष्टेन पूतरः* कुञ्जरीकृतः ॥२३०॥
स एवं चिन्तयन्नेव गत्वा राजानमब्रवीत् । देवाहं तातपादानां भृशमुत्कोऽस्मि दर्शने ॥२३१॥
राजा प्रोवाच हे भ्रातः ! पिता हि सम आवयोः ॥तत्पाददर्शनौत्सुक्यं तवेवास्ति ममापि तत् ॥२३२॥
राजा च युवराजश्च ततस्तौ सपरिच्छदौ । तदाश्रमपदं तातपादालंकृतमीयतुः ॥२३३॥
द्वावप्युत्तेरतुर्यानादूचे वल्कलचीर्यदः । दृष्ट्वा तपोवनमिदं राज्यश्रीस्तृणवन्मम ॥२३४॥

† अश्रुरहितलोचन । *लघुर्जलजतु 'पूरो' इति लोके।

सरोवराणि तान्येतान्यक्रीडं यत्र हंसवत्। तेऽमी द्रुमाः कपिरिवाखादिषं यत्फलान्यहम् ॥२३५॥
तेऽमी मे भ्रातर इव पांशुक्रीडासखा मृगाः। महिष्यस्ता इमा मातृनिभा यासामपां पयः ॥२३६॥
स्वामिन्वने सुखान्यस्मिन्कियन्ति कथयाम्यहम्। अप्येकं पितृशुश्रूषासुखं राज्ये कुतो मम ॥२३७॥
तत्राश्रमे विविशतुर्भ्रातरौ तावुभावपि। तातं चाग्रे ददृशतुर्नयनाम्भोजभास्करम् ॥२३८॥
उवाच सोमचन्द्रर्षिं प्रणमन्मेदिनीपतिः। प्रसन्नचन्द्रस्ते सूनुस्तात ! त्वां प्रणमत्यसौ ॥२३९॥
प्रणमन्तं च राजानं सोमः पस्पर्श पाणिना। मार्जन्निव तदङ्गेषु संक्रान्तवर्तनीरजः* ॥२४०॥
पित्रा स्वपाणिपद्मेन स्पृश्यमानोऽवनीपतिः। उत्कोरककदम्बाभो बभूव पुलकांकुरैः ॥२४१॥
राजानुजोऽपि सोमर्षिं प्रणमन्निदमब्रवीत्। प्राप्तो वल्कलचीर्येष त्वत्पादाम्भोजभृङ्गताम् ॥२४२॥
मौलिमाघ्राय तस्याञ्जमिव सोमः प्रमोदभाक्। तमालिलिङ्ग सर्वाङ्गं नगं नव इवाम्बुदः ॥२४३॥
सोमर्षेस्तु तदा कोष्णो बाष्पः प्रादुर्भवन्दृशोः। बभूव तत्क्षणादान्ध्यप्रध्वंसपरमौषधम् ॥२४४॥
दृग्भ्यां तत्कालमालोकवतीभ्यां तावुभौ मुनिः। ददर्श पुनरावृत्तगार्हस्थ्यस्नेहबन्धनः ॥२४५॥
पृच्छति स्म च हे वत्सौ ! सुखं कालोऽतिवाहितः ?। तावूचतुस्त्वत्प्रसादात्कल्याणद्रुमदोहदात् ॥२४६॥
अप्रेक्ष्यमाणं तत्कीदृगभूत्तापसभाण्डकम्। इति वल्कलचीर्यन्तरुटजं प्राविशद् द्रुतम् ॥२४७॥

*मार्गधूलि.।

तानि तापसभाण्डानि स्वोत्तरीयाञ्चलेन सः । प्रतिलेखितुमारेभ प्राग्ममत्वं परिस्पृशन् ॥२४८॥
तस्य चैवमभूच्चिन्ता पात्राणि यतिनामहम् । किं पात्रकेसरिकया क्वापि प्रत्यलिखं पुरा ? ॥२४९॥
इति चिन्तयतस्तस्य जातिस्मृतिरजायत । सस्मार च ह्यःकृतवद्देवमर्त्यभवान्निजान् ॥२५०॥
श्रामण्यं प्राग्भवकृतं स्मरन्वल्कलचीर्यथ । वैराग्यं परमं भेजे मित्रं निर्वाणसम्पदः ॥२५१॥
धर्मध्यानं व्यतिक्रम्य शुक्लध्याने द्वितीयके । स्थितो वल्कलचीर्यापत्केवलज्ञानमुज्ज्वलम् ॥२५२॥
तत्कालकेवलज्ञानी महात्मा सोमचन्द्रभूः । पितुर्भ्रातुश्च विदधे सुधाभां धर्मदेशनाम् ॥२५३॥
सोमचन्द्रः प्रसन्नश्च ततो वल्कलचीरिणम् । सुरार्पितयतिलिङ्गं प्राप्तबोधौ प्रणेमतुः ॥२५४॥

वयं च समवासार्ष्म विहरन्तोऽन्यदा नृप ! । उद्याने पोतनप्रत्यासन्ने नाम्ना मनोरमे ॥२५५॥
प्रत्येकबुद्धः पितरं निजं वल्कलचीर्यपि । अर्पयित्वा तदाऽस्माकं गतोऽन्यत्र नराधिप ! ॥२५६॥
राजा प्रसन्नचन्द्रोऽपि प्रययौ पोतनं पुरम् । तस्थौ च स्थिरवैराग्यो वाग्भिर्वल्कलचीरिणः ॥२५७॥
तदा प्रसन्नचन्द्रः स्वे राज्येऽर्भमपि नन्दनम् । स्वयं न्यस्य विरक्तात्मा प्राव्राजीदस्मदन्तिके ॥२५८॥

एवमाख्याय विरते श्रीवीरे परमेश्वरे । ददर्श देवसम्पातमाकाशे मगधेश्वरः ॥२५९॥
पप्रच्छ श्रेणिको भूयः प्रणम्य जगदीश्वरम् । किमेष देवसम्पातो दृश्यते द्योतिताम्बरः ? ॥२६०॥
स्वाम्यप्याख्यत्प्रसन्नर्षेरुत्पन्नमिह केवलम् । कर्तुं च तन्महिमानममराः सम्पतन्त्यमी ॥२६१॥

पुनर्विज्ञपयामास जिनेन्द्रं मगधाधिपः । भगवन्केवलज्ञानं कस्मिन्व्युच्छेदमेष्यति ॥२६२॥
नाथोऽप्यकथयत्पश्य विद्युन्माली सुरो ह्यसौ । सामानिको ब्रह्मेन्द्रस्य चतुर्देवीसमावृतः ॥२६३॥
अह्नोऽमुष्मात्सप्तमेऽह्नि च्युत्वा भावी पुरे तव । श्रेष्ठिऋषभदत्तस्य जम्बूः पुत्रोऽन्त्यकेवली ॥२६४॥
राजाऽपृच्छदसौ यद्यासन्नप्रच्यवनोऽमरः । तेजोऽस्य तत्किमक्षीणमथाचख्यौ जगद्गुरुः ॥२६५॥
राजन्नेकावताराणामन्तकालेऽपि नाकिनाम् । तेजःक्षयादिच्यवनलिङ्गान्याविर्भवन्ति न ॥२६६॥
तदा मुदाऽनादृताख्यो जम्बूद्वीपपतिः सुरः । शब्देन महताऽवादीदहो ! मे कुलमुत्तमम् ॥२६७॥
तदा च श्रेणिकोऽपृच्छद्भगवन्त कृताञ्जलिः । देवोऽयमेवं स्वकुलप्रशंसां कुरुते कुतः ? ॥२६८॥
सर्वज्ञः कथयामास राजन्नत्रैव पत्तने । इभ्यो गुप्तमतिर्नाम बभूव भुवि विश्रुतः ॥२६९॥
तस्य द्वौ तनुजन्मानावभूतां क्रमयोगतः । ज्यायानृषभदत्ताख्यो जिनदासाभिधो लघुः ॥२७०॥
ज्यायानतिसदाचारो द्यूतादिव्यसनी लघुः । तौ द्वावाद्यन्तयुगयोः प्रत्यक्षे इव वर्ष्मणी ॥२७१॥
ततश्चर्षभदत्तेन जिनदासः सुमेधसा । त्यक्तो दुराचार इति सर्वस्वजनसाक्षिकम् ॥२७२॥
अहमभ्रातृकोऽस्मीति ज्येष्ठः स श्रेष्ठिसूर्वदन् । कनिष्ठस्य शुन इव प्रवेष्टुं न गृहेऽप्यदात् ॥२७३॥
जिनदासोऽन्यदा दीव्यन्नन्येन द्यूतकारिणा । संजातद्यूतकलहे सद्योऽस्त्रेण न्यहन्यत ॥२७४॥
फलं द्यूतविषतरोरायुधाघातवेदनम् । जिनदासोऽन्वभूद्रङ्क इव भूमितले लुठन् ॥२७५॥

स्वजनाश्चर्षभदत्तमूचुर्भो परमार्हत ! । प्राणिमात्रसाधारिण्या दयया जीवयानुजम् ॥२७६॥
पात्रं कीर्त्तेर्विशुद्धायाः स बन्धुः स च नायकः । यो बन्धुं सेवकं चाभ्युद्धरते व्यसनावटात् ॥२७७॥
ऋषभोऽप्यभ्यधाद् गत्वाऽवरजं स्वजनेरितः । समाश्वसिहि हे वत्स ! त्रास्ये त्वामौषधादिभिः ॥२७८॥
जगाद जिनदासोऽपि क्षमस्व मम दुर्नयान् । कार्यमामुष्मिकं कुर्या जीवितव्यास्पृहस्य मे ॥२७९॥
प्रयच्छ परलोकाध्वप्रस्थितस्य ममाधुना । धर्मोपदेशपाथेयमार्यानशनपूर्वकम् ॥२८०॥
ऋषभोऽप्यन्वशादेवमनुजं निर्ममो भव । जप स्वच्छमनाः पञ्चपरमेष्ठिनमस्क्रियाम् ॥२८१॥
एवमाद्यशिष्यानुजन्मानमृषभः स्वयम् । आराधनां सानशनां कारयामास शुद्धधीः ॥२८२॥
विपद्य जिनदासोऽपि तेन पण्डितमृत्युना । जम्बूद्वीपाधिपो जज्ञे देवोऽयं परमर्द्धिकः ॥२८३॥
अयं चास्मद्वचोऽश्रौषीद्यद्राजगृहपत्तने । केवली चरमो भावी जम्बूर्ऋषभदत्तजः ॥२८४॥
श्रुत्वा केवलिनो भावि स्वे कुले जन्म पावनम् । देवोऽयमेवं स्वकुलप्रशंसां कुरुतेतमाम् ॥२८५॥
राजाऽपृच्छत्पुनर्विद्युन्माल्येष भगवन् ! सुरः । किं सुरेष्वतितेजस्वी ग्रहेष्विव दिवाकरः ॥२८६॥
आचख्यौ प्रभुरप्येवं जम्बूद्वीपस्य भारते । मगधाख्ये जनपदे ग्रामे सुग्रामनामनि ॥२८७॥
आर्यवान्राष्ट्रकूटो*ऽभूत्तस्य पत्नी तु रेवती । भवदत्तो भवदेवश्चाभूतां तनयौ तयोः ॥२८८॥ (युग्मम्)

* ग्रामणी ।

भवदत्तो भवाम्भोधेरुत्तारणतरीं दृढाम् । यौवनेऽप्याददे दीक्षां सुस्थिताचार्यसन्निधौ ॥२८९॥
स व्रतं पालयन्खड्गधारोग्रं श्रुतपारगः । व्यहरद् गुरुणा सार्धं द्वैतीयकीव तत्तनुः ॥२९०॥
तस्मिन्गच्छे साधुरेकोऽन्यदाऽऽचार्यान् व्यजिज्ञपत् । अनुजानीत मां यामि यत्र बन्धुजनोऽस्ति मे ॥२९१॥
तत्रास्ति मे लघुभ्राता स भृशं स्नेहलो मयि । प्रव्रजिष्यति मां दृष्ट्वा प्रकृत्याऽग्रेऽपि भद्रकः ॥२९२॥
ततस्तं श्रुतभृत्साधुसमेतं गुरुरादिशत् । परनिस्तारणपरे गुरुः शिष्ये हि मोदते ॥२९३॥
स जगाम पितुर्धाम गतमात्रो ददर्श च । भ्रातुरुद्वाहमारब्धं मन्मथद्रुमदोहदम् ॥२९४॥
विवाहकौतुकव्यग्रः स भ्राता कन्यसो मुनेः । विस्मृतान्यकरणीयो मुद्वातुलस्तदाऽभवत् ॥२९५॥
विवाहसमये प्राप्तमजानन्निव सोऽग्रजम् । नाकार्षीत्स्वागतमपि व्रतादानकथाऽपि का ॥२९६॥
विलक्षः स मुनिर्भूयोऽप्यागमत्सन्निधौ गुरोः । आलोच्याकथयत्सर्वामनुजस्य कथां तथा ॥२९७॥
भवदत्तोऽवददहो ! काठिन्यमनुजन्मनः । ज्यायांसं यदवाज्ञासीदृषिमभ्यागतं गृहे ॥२९८॥
गुरुभक्तेरपि श्रेयः किं नामोद्वाहकौतुकम् ? । तत्परित्यज्य सानन्दः स ज्येष्ठं नान्वियाय यत् ॥२९९॥
कश्चिदूचे तदा साधुर्भवदत्तासि पण्डितः । यदि त्वमनुजन्मानं निजं प्रव्राजयिष्यसि ॥३००॥
भवदत्तोऽब्रवीद्देशे मगधाख्ये गुरुर्यदि । विहरिष्यति तददः कौतुकं दर्शयिष्यते ॥३०१॥
विहरन्तोऽन्यदा जग्मुर्मगधानेव सूरयः । समीरणवदेकत्र श्रमणानां स्थितिर्न हि ॥३०२॥

आचार्यपादान् वन्दित्वा भवदत्तो व्यजिज्ञपत् । स्वजनानित आसन्नान्दिदृक्षे युष्मदाज्ञया ॥३०३॥
भवदत्तं ततश्चैकमपि तत्राऽऽदिशद् गुरुः । एकाकिनोऽप्यर्हति हि विहारो वशिनो मुनेः ॥३०४॥
भवदत्तो जगामाथ स्वेषां संसारिणां गृहे । प्रव्रज्याग्राहणेनानुग्रहीतुमनुजं निजम् ॥३०५॥
नागदत्तस्य तनयां वासुकीकुक्षिसम्भवाम् । उपयेमे भवदेवो भवदत्तानुजस्तदा ॥३०६॥
कृतोद्वाहोत्सवाः सर्वे बन्धवस्तं मुदाऽभ्ययुः । मन्यमाना उत्सवोपर्युत्सवं तत्समागमम् ॥३०७॥
सद्यः पाद्येन तत्पादौ प्रक्षाल्य प्रासुकेन ते । पादोदकमवन्दन्त मत्वा तीर्थोदकाधिकम् ॥३०८॥
भवाब्धिमज्जनभयादवलम्बमिवेच्छवः । लगित्वा पादयोः सर्वे बन्धवस्तं ववन्दिरे ॥३०९॥
मुनिरप्यभ्यधाद्बन्धून् विवाहव्याकुलाः स्थ भोः ! । यामो विहर्तुमन्यत्र धर्मलाभोऽस्तु वोऽनघाः ! ॥३१०॥
तमृषिं बन्धवः सर्वे भक्तपानादिभिर्मुदा । एषणीयकल्पनीयप्रासुकैः प्रत्यलाभयन् ॥३११॥
तदानीं भवदेवोऽपि कुलाचारं प्रपालयन् । सेव्यमानां वयस्याभिर्नवोढां मण्डयन्नभूत् ॥३१२॥
चक्रेऽङ्गरागं प्रेयस्या श्रीचन्दनरसेन सः । चन्द्रातपरसेनेवाकृष्टेन शशिमण्डलात् ॥३१३॥
तस्या मूर्ध्नि च धम्मिल्लं सुमनोदामगर्भितम् । बबन्ध ग्रस्तशशिनः स्वर्भाणोः श्रीमलिम्लुचम् ॥३१४॥
तत्कपोलफलकयोः कस्तूर्या पत्रवल्लरीम् । मीनकेतोरिव जयप्रशस्तिमलिखत्स्वयम् ॥३१५॥
कुचयोर्मण्डनं यावन्नवोढः स प्रचक्रमे । तावदागममश्रौषीद्भवदत्तमहामुनेः ॥३१६॥

